YASHOVIJAYA JAINA GRANTHAMALA, 20.

*THE*

# SHANTINATHA MAHAKAVYA

OF

SHREE MUNIBHADRA SURI.

EDITED

UNDER THE BENIGN INFLUENCE AND PATRONAGE

OF

SHASTRAVISHARAD JAINACHARYA

SHREE VIJAYA DHARMA SURI

BY

HIS HOLINESS' MOST DEVOTED SERVANTS,

SHRAVAK PANDIT HARGOVINDDAS

AND

SHRAVAK PANDIT BECHARDAS.

PRINTED AND PUBLISHED

BY

HARSHCHAND BHURABHAI

PROPRIETOR OF DHARMABHYUDAYA PRESS,

BENARES.

Veer-Era, 2437.

Price 3 Rupees.

SHETH GOKULBHAI MULCHAND.

शेठ गोकुळभाइ मुलचंद.

# प्रस्तावना ।

—:०:—

अवनतान् विधातुः समुन्नतान् समुन्नतिपद्धतिं प्रापयितुश्चावनतान् समयस्य वैचित्र्यं, वैलक्षण्यं, दुरतिक्रमत्वं च सुप्रतीतमेव । एकस्मिन् समयेऽर्हद्धर्मोऽह्र्मणिः प्राप्नुवन् समुदयम्, संहरन्नितरदर्शनतेजांसि, प्रतिबध्नन् नास्तिकोलूकेषु हर्षप्रकर्षम्, विनाशयन् जनिष्मतां निविडतराणि तमांसि; प्रकाशयंश्च परितः स्याद्वादमहामुद्राव्यवस्थितं यथावस्थितं समस्तवस्तुनिकुरम्बम्, प्रमाणप्रकरकरनिकरैर्विश्वस्मिन्नपि विश्वे प्रचुरं प्रासरीसरीत् । एतद्दर्शनानुयायिनो निष्प्रतिमप्रतिभाभरमाबिभ्राणाश्चाचार्यवर्या अपि सम्यक् समधिगम्य सकलशास्त्रपारावारपारदृश्वताम्, अक्षुण्णं लक्ष्यीकृत्य दुष्पथप्रवेशंनिषेधनेन सत्पथनिवेदनरूपां परोपकारैककर्त्तव्यताम्, युक्तियुक्तमुपपाद्य च तटस्थीभूतभूपभूयिष्ठगोष्ठीषु एकान्तवादापवादपूर्वकं दुस्तर्कसहस्रैरपि दुर्धर्षस्याऽनेकान्तकान्तसिद्धान्तस्यैव निसर्गरमणीयतया सर्वथोपादेयत्वम्, बहुशो परास्थन्त मिथ्यात्वध्वान्ताध्मातस्वान्ता एकान्तवादिनः कुतीर्थ्यान् । उद्घोषयामासुश्च लब्धजयश्रियः प्रतिपक्षसाक्षिणां समक्षमर्हच्छासनस्य न्यायप्राप्तं सर्वत्र विजयडिण्डिमम् । किं बहुना ? तत्प्रौढतांप्रतापेनैवैकान्तदर्शनानुयायिभिरपि प्रतिपक्षोपप्रक्षिप्ताक्षुण्णविकल्पानल्पदोषप्रतिक्षिप्यमाणैरानिरीक्षमाणैश्चोपायान्तरसद्भावं अक्षरान्तरैर्वा, भङ्ग्यन्तरैर्वा, रीत्यन्तरैर्वा शरणीकृत एवाऽस्मत्परमसिद्धान्तो भगवान् स्याद्वादवादः । अत्र च निःसंशयं संवदत्सु नैकेषु स्वपराम्नातेष्वनिम्नेष्वाम्नायेषु नास्ति कथंकथिकतायाः कथं कथमपि प्रवेशलेशावकाश इति जातेतिहासप्रतिभासानां पद्तर्कीतर्कपरिकर्कशसंपर्काणां चेदानीन्तनानामपि प्राज्ञानां प्रकटमेव प्रज्ञामार्गमवगाहते ।

एवं च चातुर्वैद्यमहोदधिभिर्जैनाचार्यवर्यैः संसाधयद्भिः सम्यग्

निजं लक्ष्यम्, अवगणयद्भिर्दुष्टकष्टदाऽरिष्टपटलम्, प्रकाशयद्भिः सर्वत्र जिनेन्द्रोपदिष्टानि शुद्धतत्त्वानि, सुदूरमुत्सारयद्भिश्च दुष्कर्मकर्दमसंगसंगतं मिथ्यात्वसंसर्गम्, बहु बहूपकृतं तात्कालिकेष्वस्तोकलोकेष्वित्यत्र केन किं वक्तव्यम्? । भविष्यन्त्यपि जनसंहातिर्मा भूदनेन सत्सिद्धान्तपीयूषरसेन वञ्चितेति सद्भावनाभावितान्तःकरणैश्च तैर्मुहीयांसं समयव्ययमपि गरीयांसं च प्रयासमपि विना संकोचेन विनिर्मायाऽगण्यानि तत्तद्विषयसुविवेचकानि शास्त्राण्यपि निरमायिषत ।

किन्तु कालवैषम्येण दुर्भाग्यलसितेन वा दूरे तान्याचार्यरत्नानि, तिष्ठतु संपूर्णानां ग्रन्थानां दर्शनदुराशा, नामान्यपि तेषां दुर्ज्ञानानि समजायन्त । तत्तत्समयसमुद्भूतभूपापसदोपद्रवैः, अन्यैश्चापि परस्परद्वेषेर्ष्याव्यामोहादिसमुत्थैः कारणैस्तेषां ग्रन्थरत्नानां महानंशः प्रणाशं समशिश्रियत् । महाभाग्यवशेनाऽवशिष्टोऽल्पीयानप्यंशस्तादृशीं दुर्दशां मा लब्ध, भाण्डागारेष्वेव पतितश्च कृमिभोज्यतां मा प्रापदिति तदर्थो यदि शीघ्रमेव सुयोग्यः प्रयत्नः स्यात्, सर्वोऽपि च जनसमूहस्तल्लाभं सुखं गृह्णीयात्, किमन्यत् कर्तव्यं शिष्टतामाश्रयेत्? । परंतु यत्र केचिज्जैननामधेयधारिणोऽपि सारासारादिविचाररहितत्वेन ग्रन्थोद्धारं वा तत्प्रकाशोद्भूतामुन्नतिं वाऽनिच्छवोऽसहिष्णवो द्विषन्तश्च तदुन्नतिं कुर्वाणैरपि सज्जनैर्विघ्नसंघातं संघटयन्ति । यत्र च केचन ग्रन्थोन्नतिमनिन्दन्तोऽपि, इच्छन्तोऽपि वाऽऽदर्शपुस्तकादिसाहाय्ये शक्तिमन्तोऽपि कर्मदोषवशीभूतत्वेन स्वशक्यामपि सहायतां विधातुं बहु संकुचन्ति । यत्र पुनः कतिपये श्राद्धास्तदुन्नतौ दत्तावधाना महता द्रव्यव्ययेन नातिशुद्धतया पुस्तकप्रकाशं प्रकुर्वन्तोऽपि महामोहापहतात्मानोऽमूल्यमवितीर्य मूल्येनापि चाऽविक्रीय मुद्रितान्यपि पुस्तकानि कपाटसंपुट एव कीटभोज्यतां नयन्तस्तद्विषये गजस्नानमेवाऽनुकुर्वन्ति । तत्र को नाम ग्रन्थोद्धारः?, का नाम शास्त्रसमुन्नतिः?, किं नाम शुभपरिणामित्वम्?, ग्रहिलवृन्देष्विव यथा तथा चेष्टमानेषु तेषु हतैव शास्त्रोन्नतावस्था, व्यर्थैव पुण्योदर्कसंभा-

चना, विनष्टप्रायैव च शासनोदयशुभाशेत्यवसीयते ।

कतिचित्तूद्वहन्तोऽपि ग्रन्थसंशोधनसाहसम्, अदधतस्तद्योग्यज्ञानसद्भावम्, कुर्वन्तोऽशुद्धतया पुस्तकसंपादनम्, प्रकटयन्तस्तत्तत्स्थलेषु ग्रन्थानामसन्त्यपि दूषणानि, अधिक्षिपन्तश्च तद्द्वारा निर्दोषानपि तत्कर्तॄन् महाचार्यान्, ज्ञानमात्रागर्विता इव सत्यापलापेनाऽसत्यप्रकाशेन च भ्रान्तिं नयन्ति जनसमाजम् । संवदति चैतत् श्रीपरिशिष्टपर्वाऽपि । तथाहि—अयं ग्रन्थः कलिकालसर्वज्ञश्रीहेमचन्द्रप्रभुभिः प्रणीतः, येषां व्याकरण—न्याय—साहित्य—काव्य—योग—नीति—स्तुति—च्छन्दः—कोशादिसर्वविषयकस्वतन्त्रशास्त्रविनिर्मातॄणां वैयाकरणमुख्यत्वेन, तार्किकसिंहत्वेन, सैद्धान्तिकशिरोरत्नत्वेन, कविचक्रचक्रवर्तित्वेन च परितो विश्रुता सुकीर्तिः समस्तमपि जगत् संव्याप्याऽद्यापि संस्थिता । अधिकृतमत्र श्रीमहावीरदेवानन्तरजातानां श्रीजम्बूस्वामिप्रभृतीनां यथाजातमितिवृत्तम् । प्रकाशितश्चायं कलिकातास्थेन एसियाटिक्समाजेन । संपादकश्चास्य H. Jacobi पण्डितः । स च तत्प्रस्तावनायां कर्तृविशिष्टप्रशंसानन्तरमेवमुल्लिखति—

" To the fact that Hemachandra has used Prākrit originals, must be ascribed his occasional use of Prākriticisms, e. g., अवतृ[1], XII, 320 used in the sense of उतृतृ[2], and I, 67, 136, XIII, 104 उतृतृ, for अवतृ just as in Prākrit ओयरइ and उत्तरइ are interchangeable. The word पदानुसारिन् in XII, 137 is probably a wrong translation of Prākrit पयाणुसारी which means पदानुस्मारिन्, compare जाईसर = जातिस्मर. The name वीरमती in II, 82 is a Prākriticism for वीरवती. Unusual, if not against grammar, are the forms मातरपितराभ्यां in III, 130, the adjectives चिकीर्षु in VII, 9 and प्रतिचिकीर्षु in VIII 453 instead of चिकीर्षु and प्रतिचिकीर्षु, the use of the simplex व्यतिइ instead of the causative. Another proof of Hemachandra's careless and hasty composition is his rather too frequent use of mean-

१ अवतॄ स्यात् । २ उतृतृ युक्तम् ।

ingless words. to fill up an otherwise too short verse. His verses frequently bear the marks of rapid versification like those of the Latin poet who

IN HORA SAEPE DUCENTOS,
UT MAGNUM, VERSUS DICTABAT STANS PEDE IN UNO.

Some verses contain metrical faults: in श्रेष्ठिन्क्षभदत्तस्य, I, 264, किं बहुनार्थपरासुं II, 329, तौ मरुता प्रीणयितु VI, 49, सम्यगुपलक्षयेहं, XI, 38, कान्दविकानथादिशत्, XI, 110, मालवकैशिकीमुख्य०, XIII, 59 the second and third syllables of the *pāda* are short, though this is expressly forbidden by writers on metrics. In I, 288, II, 251, 484, III, 9, VIII, 370, XIII, 73 an enclitical monosyllabic word stands after the caesura against the rule. The third *pāda* in III, 214 ललिताङ्गवत्तथाचास्ति consists of nine syllables; such *pādas* of nine syllables are not unfrequent in epical poetry, but classical poets avoid them. There are some nicer rules on the Vipulâ form of the 'sloka which though not laid down in native works on metrics are always observed by Mahâkavis. Hemachadra's verses set these rules aside nearly as often as they conform to them, e. g., in III, 145 the first *pāda* is correct, but the third is bad."

यद्यप्ययं लेखः सर्वथा प्रमाणाऽस्पर्शित्वेन विद्वत्सदस्सु कथञ्चिदप्यादरं नैवावहति इत्युपेक्षाक्षेत्रमेव प्रेक्षाणाम्, तथाऽप्यभ्युपगमवादेनापि तस्याऽसत्यता सप्रमाणं प्रदर्श्यमाना संदिग्धानां विदग्धानां संशयापोहकत्वेनाऽवश्यमुपकर्त्री, इति प्रतिपाद्यते–

पूर्वं तावदत्र ग्रन्थे प्रयुक्तानां केषाञ्चिच्छब्दानां प्राकृतप्रयोगसादृश्यदर्शनेन प्राकृतमूलत्वसंस्थापनमेव विचारासहम्, अतिप्रसङ्गात् । अतिप्रसङ्गश्च संस्कृतप्राकृतभाषयोः कार्यकारणभावेन बहुषु स्थलेष्वेकतया तत्सादृश्यवतां शब्दानां कुत्रापि संस्कृतग्रन्थेऽनिवार्यत्वेन सर्वेष्वपि संस्कृतपुस्तकेषु प्राकृतमूलत्वापत्तेः । कः खलु संख्यावान् प्राकृतेऽपि देवादिशब्दानां समानत्वेन संस्कृते तत्प्रयोगं निषेधति ?, तत्प्र-

यौक्तारं च प्राकृतशब्दव्यवहारित्वेन दूषयति ?, दूषयन् वा कथमपहा-स्यतां न याति ? ।

प्रकृतौ भवं, प्रकृतेरागतं वा प्राकृतम्, प्रकृतिश्चैतस्य संस्कृत-मिति सर्वानुमतसिद्धान्तेन प्राकृतस्याऽपि मूलं संस्कृतमेवेति न्याय्यम्, तथा चाऽसति प्रतिबन्धके ( विशेषनियमे ) संस्कृतानुसारिण्येव प्राकृतेऽपि शब्दार्थव्यवस्था; इत्युत्पूर्वकस्यावपूर्वकस्य च तृधातो-र्विशेषनियमं विनापि प्राकृते एकार्थतामङ्गीकुर्वन्, तदन्यथानुपप-द्यमानत्वेन संस्कृतेऽपि तत्तत्पूर्वकस्य तृधातोर्न्यायप्राप्तायां समा-नार्थतायां प्रयोगं कुर्वन्तं कर्तारं च दूषयन् प्रस्तावकः किञ्चित् पौर्वापर्यमपि न पर्यालोचयतीति चित्रम् । किञ्च, हेमचन्द्राचार्यस्यैव स्वतन्त्रमहाव्याकरणप्रणेतृत्वेन, अनेकाप्रतिमकोशकर्तृत्वेन च सर्वैर-प्यङ्गीकृतप्रामाण्यतया तत्प्रयुक्तप्रयोगाणां स्वतःसिद्धैव प्रमाणता, इति नात्राऽन्यानि प्रमाणान्यपेक्ष्यन्ते; तथापि 'तुष्यतु दुर्जनः' इति न्या-येनाऽनेकैः सुविश्रुतकविवरैर्हेमचन्द्राचार्येणेव बहुशः प्रयुक्तयोरेतयो-र्विवादास्पदीभूतयोः प्रयोगयोः कानिचिदुदाहरणानि प्रदर्श्यन्ते—

"वनान्तपर्यन्तमुपेत्य सस्पृहं क्रमेण तस्मिन्नवतीर्णदृक्पथे" ।

नैष–१–७५.

"स्वर्गिवर्ग इव नाकिविमाना–दुत्ततार भुवि हीरकुमारः"

हीरसौ–५–९.

"विमानैर्व्योमतस्तूर्णमुत्तीर्णा वर्णिनीवृताः" वासु–१–६५२.

"खिन्ना इवोत्तेरुरमी भ्रमिश्रमाच्चन्द्रार्यमस्यन्दनगा नभस्तलात्"

विजय–१०–२०.

यदपि 'प्राकृतस्य पयाणुसारीति शब्दस्य पदानुसारीति यत् कर्त्राऽनूदितम्, तदसत्यमेव, किन्तु पदानुस्सारी इत्येव स्यात्, यथा जाईसर—जातिस्सर' इति प्रोक्तम्; तदपि एतस्य प्राकृतानुवादरूप-त्वेनाऽस्वीकारादेव निरस्तम् । तदङ्गीकारेऽपि वा नैतत् कथमपि कर्तु-र्दूषणमाधातुमलम्, संस्कृतस्य पदानुसारिशब्दस्याऽपि प्राकृते पया-

णुसारीतिरूपनिष्पादनात्; अर्थतोऽपि पादानुसारीति कर्त्रा प्रयुक्तस्यैवाऽत्र संगतत्वात्; अन्यत्राऽपि–

"सीसइव जस्स ताराणुसारिणिग्गयकलङ्कवलएण।".

"गूढोयरतामरसाणुसारिणी भमरमालव्व।"

इत्यादिषु बहुशः कविवरैः प्रयुक्तेषूपलभ्यमानस्य अणुसारिशब्दस्य संस्कृते प्रस्तुतानुसारमनुसारिरूपेणैवाऽनुवादस्य दर्शनाच्च। यथा 'अणुसरेइ=अनुसरति, अहिसारण=अभिसारण' इत्यादीनि। न हि संस्कृतस्याऽनुस्मरतिरूपस्यैव, अभिस्मारणशब्दस्यैव च प्राकृते 'अणुसरेइ, अहिसारणेति भवितुमर्हति, किन्तु प्रस्तावकानभिमतं अनुसरतिं, अभिसारणेत्याद्यपि। तथा च प्राकृतद्व्याश्रयमहाकाव्ये–

"किस्सा तिस्सा जिस्सा सो जुवईए अणुसरेइ।" ४–७४.

गौडवधेऽपि–

"अहिसारणम्मि तं रिउसिरीए णिसियासिघडियपडिबिम्बो।" ७१२.

न चात्र कथमपि अनुस्मरति अभिस्मारणं चेति प्रस्तावकानुमतं घटामाटीकते, प्रस्तुतासङ्गतत्वात्, तट्टीकाकाराभ्यामपि अनादृतत्वेन तिरस्कृतत्वाच्च। एतेनात्र प्रस्तावकप्रयुक्तं जाईसरेत्येकदेशीयमुदाहरणमप्यकिञ्चित्करत्वेन सुतरां प्रत्युक्तम्। इत्यमुमतीव सुज्ञानं विषयमजानन्, निर्दोषेऽपि दूषणं प्रदर्शयन् प्रस्तावकः कियत् साहसं प्रकटयतीति विदुषामेव विचारगोचरः।

यदपि 'वीरवतीति प्रयोज्ये प्राकृतानुसारेण वीरमतीत्यशुद्धरूपं

---

१ "नो णः" (हेम–प्रा–१।२२८) इति नस्य णत्वे "कगचज-" (१।१७७) इति दस्य लुकि "अवर्णे-" (१।१८०) इत्यनेनाकारस्य यत्वे सति।
२ गौडवधे १०६४, "शिष्यत इव कथ्यत इव यस्य तारानुसारिनिर्गतकलङ्कवलयेन" इति तट्टीका। ३ गौडवधे १८, "गूढोदरतामरसाणुसारिणी भ्रमरमालेव" इति टीकायाम्। ४ "स कां यां तां युवतिमनुसरति···पृष्ठानुयायी भवतीति भावः" इति टीका। ५ "अभिसारणेऽभिसरणकाले त्वं रिपुश्रियाः निशितासिघटितप्रतिबिम्बः" इति तट्टीकायाम्।

कर्त्रा प्रयुक्तम्' इत्युक्तम्, तदपि भ्रान्तिमूलमेव, ऊर्म्यादिपाठेन वीर-शब्दस्य मतोर्मकारस्य वत्वनिषेधेन तस्य[1] ( वीरमतीत्यस्य ) सूपपद्यमानत्वात्, गणपाठस्य चेष्टविषयत्वेन संज्ञायामेव तेन वत्वनिषेधात् "ह्रिणीयते वीरवती न भूमिः"[1] इत्यादौ वत्वस्याऽपि निष्पत्त्या बाधाभावाच्च ।

यदर्थं भिन्नमेव व्याकरणसूत्रम्, न ते महाकविभिरप्रयोज्यतां कदाप्यर्हन्ति, यथाऽमावास्यादि, भिन्नमेव चैतत्सिद्ध्यर्थं "मातरपितरं वा" (३।२।४७) इति सिद्धहेमव्याकरणस्य "मातरपितरमुदीचाम्" (६।३।३२) इति पाणिनीयस्य च सूत्रम्; इति मातरपितरस्य काव्यप्रयोगयोग्यत्वे निर्दोषं निष्पन्नेऽपि,

"पितरौ मातापितरौ मातरपितरौ पिता च माता च"[2]

"मातापितरौ पितरौ मातरपितराविति प्रसूतातौ"[3]

"मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ"[4]

इत्यादिषु च बहुषु कोशेष्वपि तत्प्रामाण्यं संवदत्सु मातरपितरशब्दस्य कर्त्रा प्रयुक्तस्य प्रयोगानर्हतां प्रजल्पन् प्रस्तावकः कथमिव प्रमाणतामङ्गीकुर्यात् ?, कथं च तस्याऽप्यभिमतानां बहुशो दृश्यमानानां धवलार्जुनादिशब्दानामपि प्रयोगानर्हतां वदतो वदावदस्य वक्त्रं वक्रीकुर्यात् ? । एतेन चिकीर्षति प्रतिचिकीर्षतीति कर्त्रर्थे क्विपि सुष्ठु निष्पद्यमानयोः, "हास्यास्पदं काव्यचिकीः कवीनाम्"[5] इत्यादिषु चोपलभ्यमानयोश्चिकीर्ष्-प्रतिचिकीर्ष्शब्दयोरप्यप्रयोज्यतादूषणं नितरां निराकारि ।

'व्यतिपूर्वकस्य इधातोः प्रयोक्तृरूपे व्यवहर्तव्ये णिवर्जितमेव तत् कर्त्रा व्यापारि, लघ्व्यामेव च वचनरचनायां कर्तव्यायां गुर्वी साऽकारि' इति निर्भयमुल्लिखंस्तत्स्थलमपि चाऽनिवेदयन् प्रस्तावकः

---

१ भट्टिकाव्ये द्वितीये सर्गे—३८ । २ अभिधानचिन्तामणौ मर्त्यकाण्डे २२४ । ३ वैजयन्त्यां पृ० १७६ पं० ९४ । ४ अमरकोशे मनुष्यवर्गे– ३७ । ५ सम्यक्त्व-संभवमहाकाव्ये १–१४ ।

साहसिक इव विरूपमेवाऽऽचरन् कथं प्रतिवचनीयः ? । न हि तत्स्थलमात्रस्याऽप्यनिर्णीतौ निर्मूलमेव साधनवचनं वा दूषणाभिधानं वा भूषणाय भवति । यदि चेदानीमपि प्रस्तावकस्तत्स्थाननिर्देशपूर्वकं स्वमतमाग्रहीष्यते, बद्धस्पृहेयमस्मल्लेखिनी सयुक्तिकोक्तिक्रमेण सुख-मेव योग्योत्तराय प्रयतिष्यते, इत्यास्तां तावत् ।

छन्दःशास्त्रसंबन्धे वदता प्रस्तावकेन कर्त्रा प्रयुक्तानि यानि च्छन्दांसि दुष्टत्वेनाऽभिहितानि, तानि निःशेषाण्यप्यत्र श्रीमतो हेमचन्द्राचार्यस्याऽपि स्वयं छन्दोऽनुशासनविनिर्मातुरन्यस्येव स्व-तन्त्रप्रमाणत्वेनाऽवश्यादरणीयतया दूषणान्येव न भवन्ति, किमङ्ग ! तद्विवेकप्रयत्नेन ? । तथापि "येन केन प्रकारेण संतोषं जनयेत् सुधीः" इत्युक्तिं समाश्रित्य प्रस्तावकतोषपोषायाऽन्यैरपि च्छन्दः-शास्त्रैस्तत्सत्यता प्रकटीक्रियते—पूर्वं तावद् "श्रेष्ठिऋषभदत्तस्य" इत्या-दिषट्के द्वितीयतृतीयाक्षरलघुत्वेन "न प्रथमात् स्नौ" (पि०सू०५।१०) इति नियममालम्ब्य यद् दूषणमुपन्यस्तम्, तच्छन्दःशास्त्रानवगाहफल-मेव, यतोऽयं नियमोऽनुष्टुब्भेदविशेषे वक्त्रनामन्येव समस्ति, न त्व-न्यत्र,"पादस्यानुष्टुब् वक्त्रम्" (पि०सू० ५।९) इत्येतदुत्तरमस्य नियमस्य प्रतिपादनेन तस्यैव तत्रानुवृत्तेः।तथा च तट्टीकाकारः "न प्रथमात् स्नौ" (पि०सू० ५।१०) इत्यस्यैव वृत्तौ—"अत्र वक्त्रजातौ पादस्य प्रथमाद् वर्णा-दूर्ध्वं सगणनगणौ न कर्तव्यौ" इति। न च कर्त्रा सर्वत्र वक्त्रच्छन्दांस्येव व्यवहृतानि, किन्तु तन्नियमरहितान्यन्यान्यपि, महाकाव्यत्वेनाऽपरा-परच्छन्दसामुपनिबन्धस्य समुचितत्वात्; इति क्व नाम दूषणदुःस्थ-ता ?। न चानुष्टुबिति पदस्येव वक्त्रमिति पदस्यापि "भ्रौ न्तौ च" (पि० सू० ५।१९) इति सूत्रं यावदनुवृत्तेः, तदनन्तरं चाष्टाक्षरजातेरभावेन वक्त्र एवाष्टाक्षरजातेः पर्यवसिततया श्रीहेमचन्द्रव्यवहृतानामप्यष्टाक्षरवृत्तानां नितरां वक्त्रत्वापत्तिः; तथा च सिद्धमेव तद्दूषणसिद्धिरूपं समीहितमि-ति वक्तुं शक्यम्, तदुत्तरत्र तदभावेऽपि तत्पूर्वत्र "ग्लिति समानी" (पि० सू० ५।६) इत्यादिसूत्रविनिर्दिष्टानामष्टाक्षरवृत्तानां भूयसां

सद्भावात् "वितानमन्यत्" (पि० सू० ५।८) इति सूत्रोक्ते च्छन्दसि सुतरां तत्समावेशेनोक्तदूषणस्य दूरोत्सारितत्वात्। अत एव तत्र (पिङ्गलशास्त्रे) "वितानमन्यत्" इति सूत्रवृत्तौ प्रदर्शितम्–

"अन्यदतो हि वितानं श्वेतपटेन यदुक्तम्।
चित्रपदापि च भौ गौ तेन गतार्थमिवैतत्" ॥१॥

इत्युदाहरणमपि संगच्छते, अन्यथाऽत्राऽपि द्वितीयतृतीयाक्षरलघुत्वेनाऽनिवार्यो दूषणप्रसङ्गः, अनिष्टं चैतत् प्रस्तावकस्याऽपि, नियामकाभावेन संपूर्णेऽपि शास्त्रे दुष्टत्वस्य प्रसक्तेः। न चैतेन ग्रन्थेनैव वृत्ते भगणद्वयं गुरुद्वयं च क्रमेणोपलभ्यते, तत्रैव तद्दूषणाभावः, न त्वन्यत्र, इत्यपि वचनं चारुतामञ्चति। "वितानमन्यत्" (पि० सू० ५।८) इत्यत्र अन्यदिति व्यापकनिर्देशेन समानीप्रमाण्यौ व्यतिरिच्य सर्वस्याऽप्यष्टाक्षरच्छन्दसो ग्रहणात्, इतरथा "वितानं भौ गौ" इत्येव सूत्रं कुर्यात्। न चेदमास्माकमेवाऽऽम्नातम्, तट्टीकाकारेणाऽप्येवमेव प्रतिपादनात्, तथाहि–"किं च 'वितानमन्यत्' इति ब्रुवन् सूत्रकारो वितानस्यानेकप्रकारतां दर्शयति, अन्यथा 'वितानं भौ गौ' इत्येव विदध्यात्" इति। नन्वेवमप्येकस्मिन्नेव सर्गे क्वचन वक्त्रवृत्तम्, कुत्रचिद् विपुलाच्छन्दः, क्वचिच्च वितानमिति भिन्नभिन्नवृत्ताङ्गीकारेऽस्य महाकाव्यत्वक्षतिः, "पद्यं प्रायः-"[1] इति महाकाव्यलक्षणे सर्गान्त्यवृत्तसादृश्यप्रतिषेधेन तदतिरिक्तानां सर्गान्तःपातिनां वृत्तानां समानतायाः सामर्थ्याल्लाभात्, विशेषनिषेधस्य शेषाभ्यनुज्ञानान्तरीयकत्वात्, इति चेद्। मैवम्, वक्त्रविपुलयोरिव वितानस्याऽप्यनुष्टुबन्तर्भावेन तेषां सर्वेषामप्यनुष्टुप्तया समानत्वेन महाकाव्यलक्षणसंसिद्धेः; अन्येष्वपि सर्वेषु महाकाव्येष्वनुष्टुप्सर्गे व्यवहृतवक्त्राद्यनेकभेदे एवमेव लक्षणसमन्वयात्। अनुष्टुप्त्वं च वितानस्य "पादस्यानुष्टुब्वक्त्रम्" (पि० सू० ५।९) इत्यतः सूत्रात् सिंहावलोकितन्यायेनाऽनुष्टुबधिकारात्, इतरथा "ग्लिति समानी" (पि० सू० ५।६)

---

१ श्रीहेमचन्द्रप्रणीतकाव्यानुशासनेऽष्टमाध्याये पृ० ३३०।

इत्यस्मिंस्ततोऽपि पूर्वसूत्रेऽष्टाक्षरनियमाभावेन व्यवस्थाहानिप्रसङ्गात्, तट्टीकायामप्यस्याशयस्योपलभ्यमानत्वाच्च[1]।

यच्च ततोऽनन्तरं काव्यषट्के चादेः पादादित्वं क्वचन पादान्त्यत्वं च दूषणमभ्यधित प्रस्तावकः, तदप्ययुक्तम्, पादादौ चाद्यप्रयोगनियमस्य प्रायिकत्वात्। प्रायिकत्वं च तस्य "पादादौ न च वक्तव्याश्चादयः प्रायशो बुधैः"[2] इत्यादितन्नियमप्रतिपादक एव सूत्रे प्रायशःशब्दस्य साक्षाल्लक्ष्यमाणत्वात्[3]। तथापि तन्नियमस्य सार्वत्रिकत्वाङ्गीकारे

"रे राक्षसाः! कथयत क्व स रावणो यो रत्नं रवीन्दुकुलयोरपहृत्य नष्टः"
"आः! सर्वतः कैरवमापिबन्ति ज्योत्स्नां कषायमधुरा मधुना चकोराः"
"मुखार्पितैकाङ्गुलिसंज्ञयैव मा चापलायेति गणान् व्यनैषीत्"[4]
"क्रियासु युक्तैर्नृपचारचक्षुषो न वञ्चनीयाः प्रभवोऽनुजीविभिः"[5]
"न क्षोणीभङ्गभीरुः कलयति च शिरःकम्पनं तन्न विद्मः"[6]
"चरणगतसखीवचोऽनुरोधात् किल कथमप्यनुकूलतां चकार"[7]

इत्यादावपि दूषणप्रसङ्गात्, तत्प्रसङ्गसङ्गमस्य च प्रस्तावकस्याऽप्यनिष्टत्वात्। किञ्च, "चादयः प्रायशो बुधैः" इति पादादावेव चादिनिर्देशं कुर्वन्नालङ्कारिकशिरोमणिः स्वयं ज्ञापयति—चतुर्थपादादौ स्वरादिपदसंहिताश्चादयो नैव दोषायेति सहृदयहृदयसंवेद्यमर्थम्, इतरथाऽत्रापि पादादावेव चादिनिर्देशेन दूषणप्रसञ्जनस्य निवारयितुमशक्यतया "प्रायशश्चादयो बुधैः" इत्येव वक्तव्यस्योचितत्वात्। इति सूक्ष्मेक्षिकयाऽपि कुतस्तत्र दूषणावकाशः?। पादान्ते प्रयुक्तस्य तु चादेर्दूषणत्वं पूर्वोक्ततन्नियमादौ नैवोपलभ्यत इत्यस्वीकारादेव तिरस्कृतम्। तदुररीकरणेऽपि वा

---

१ तथाहि—" 'पादस्यानुष्टुब् वक्त्रम्' (पि० सू० ५।९) इत्यतः सूत्रात् सिंहावलोकितन्यायेनाऽनुष्टुब्ग्रहणमनुवर्तते। तेनाऽष्टाक्षरः पादो यावद्भिः" इत्यादि। २ वाग्भटालङ्कारे १--१७। ३ वाग्भटालङ्कारे तस्यैव श्लोकस्य सिंहदेवगणिरचितायां टीकायां प्रायशःशब्दस्यैव चारितार्थ्यें निदर्शनम्। ४ कु० सं० ३-४१। ५ कि० १-४। ६ नैष० १२--३९। ७ शिशु० ७-११।

"स्वयं तदङ्गेषु गतेषु चारुतां परस्परेणैव विभूषितेषु च"

"हरिराकुमारमखिलाभिधानवित् स्वजनस्य वार्तमयमन्वयुङ्क्त च"

"त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतः"।

"मनसः शिखराणां च सदृशी ते समुन्नतिः"

इत्यादौ प्रायः सर्वत्राऽपि महाकविसूक्तेषु तद्दूषणप्रसक्तेः केनाऽप्यपहस्तयितुमशक्यत्वात्, इत्युभयतोऽपि पाशारज्जुः प्रस्तावकस्य।

यत्पुनः "ललिताङ्गवत् तथा चाऽऽस्ति" इत्यत्रैकस्मिन्नेव पादे नवाक्षरत्वेन तच्छन्दसो दुष्टत्वमभिहितम्, तदप्यनर्हम्, एवंजातीयस्याऽपि च्छन्दसः सद्भावेनैतस्य नियमभङ्गासङ्गतत्वात्। स्पष्टं चैतद् गणरत्नमहोदधौ। तथा च तत्रोल्लेखः—"अयमप्यस्ति वृत्तप्रभेदो यत्रैकः पादो नवाक्षरोऽन्येऽष्टाक्षराः" इति। अन्यैरप्येतानि बहुशो व्यवहृतानि यथा—

"परिपद्वलाद् महाब्रह्मैराट नैकटिकाश्रमान्"

"प्रधाने कर्मण्यभिधेये लादीनाहुर्द्विकर्मणाम्।

अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः" ॥ १ ॥

न चैतच्छन्दोविशेषस्य बहुप्रसिद्धत्वाभावेन व्यवहृतिर्दोषाय इति वक्तुं योग्यम्, महाकाव्यत्वेन विशिष्टशब्दप्रयोगस्येव विशिष्टच्छन्दोग्रहणस्याऽपि दोषास्पदत्वाभावात्, प्रत्युत शोभावहत्वेन गुणरूपत्वात्।

यदपि "मा साहसमिति मुहुः" इत्यत्र नविपुलायां चतुर्थाक्षरस्य लघुत्वेन स्खलितविलसितमिति व्याहृतम्, तदप्यविचारितरमणीयम्, विपुलायां चतुर्थाक्षरेण गुरुणैव भवितव्यमिति निश्चयस्य कुत्रचन च्छन्दःशास्त्रेऽनुपलम्भात्। आम्नायस्य तु तादृशस्य च्छन्दोविद्भिरपि प्रायिकत्वेनैव कक्षीकारात्। तथा च पिङ्गलस्यैव टीकाकारः—"सर्वासां विपुलानां चतुर्थो वर्णः प्रायेण गुरुर्भवतीत्याम्नायः" इति। अत एव

"शूरः शौरिरशिशिरैराशाशैराशु राशिशः" (माघ० १९–१०८)

---

१ नैष० १५–४८। २ शिशु० १३–६८। ३ कु० २–१५। ४ कु० ६–६६।

इत्यादयो महाकविव्यवहाराः सङ्गच्छन्ते । अन्यथाऽत्रापि सत्यपि चित्रगुणे छन्दसस्तु दुष्ठुत्वप्रसङ्गः कथं सङ्गतिं नेयात् ? । स्पष्टरूपेणैव निष्टङ्कितं चैतत् पिङ्गलस्यैव "भ्रौ न्तौ" (५।११) इति विपुलाप्रतिपादके सूत्रे तविपुलाप्रसङ्गे तट्टीकाकारेण

" वन्दे देवं सोमेश्वरं जटामुकुटमण्डितम् ।
खट्वाङ्गधरं चन्द्रमःशिखामणिविभूषितम् " ॥ १ ॥

इत्येतच्चतुर्थाक्षरलघुरूपं निदर्शनमुपन्यस्यता हलायुधेन । इत्यलमतिपल्लवितेन ।

एवं च तत्सर्वमपि प्रयोगजातं छन्दोजालं च निर्बाधं स्वपरानेकप्रमाणसंसिद्धं भवत् तत्प्रणेतॄणां वाऽसत्यप्रयोजकतां सूचयति, निर्दूषणं भूषणमेव च दूषयता प्रस्तावकस्य वा उपालम्भयोग्यतां ख्यापयतीति स्वयं विदांकुर्वन्तु विद्वांसः ।

प्रभूतं चात्र विषये वक्तव्यम् , तच्चोक्तमेव प्रस्तावकेन सह पूर्वं जाते एतद्विषयके एव पत्रव्यवहारे । प्रकटीभविष्यति चायं स्तोकेनैव कालेन, इति विशेषमभिलाषुकैस्तत्रैव द्रष्टव्यम् । इह तु तत्सर्वमुच्यमानं विस्तराय भवद् न समीचीनतां भजेदिति नाभिधीयते ।

तदेवं स्पष्टमेव निजेऽज्ञाने प्रकटीकृतेऽप्येतावताऽसंतुष्यन्नाधिकाधिकं तदुद्घोषयितुमिव स एव H. Jacobi महाशयः श्रेयस्करमण्डलप्रकाशितस्य श्रीप्रद्युम्नसूरिविरचितसमरादित्यसंक्षेपस्याऽपि प्रस्तावनायामेवमेव तत्कर्तारमाक्षिपति । तथाहि–

* Still his work is not free from faults, even against grammar, the worst of which, a Prakriticism, इमैः instead of एभिः, occurs VIII 520.

वाढमास्माकीनो विश्वासः, यद्यं प्रस्तावकमहाशयः प्रागेवाऽत्र

* तथापि तेषां प्रद्युम्नसूरीणामयं ग्रन्थो व्याकरणसंबन्धिदूषणै रहितो नास्ति, येषु सर्वतोऽप्यपकृष्टं " एभिः " इत्यस्य स्थाने " इमैः " इति प्रयोगकरणम्, इदं च रूपं प्राकृतानुसारि " इत्यर्थः ।

विषये स्तोकमपि विचारं निरमास्यत, न हि कदाप्येतादृशीं समालोचनां विधातुं प्रावर्तिष्यत, विभक्त्यन्तप्रतिरूपकाव्ययत्वेन इमैरिति प्रयोगस्य "विभक्तिथमन्ततसाद्याभाः" (सि० हे० १।१।३३) इति व्याकरणसूत्रेणैव संसिद्धेर्व्याकरणातिविरुद्धत्वकथनस्य कथमप्यनिष्पत्तेः, ते मे इत्यादिवत्, कथमन्यथा "न मे श्रुता नापि च दृष्टपूर्वा" इत्यस्याऽपि निष्पत्तिः ? कर्तृत्वेन षष्ठ्या अघटनात्। यथा त्वत्र विभक्तिप्रतिरूपकाव्ययत्वमेव शरणम्, तथा प्रकृतेऽप्यस्तु, समानत्वाद् न्यायस्य।

"इयन्त इति संख्यानं निपातानां न विद्यते।
प्रयोजनवशादेते निपात्यन्ते पदे पदे" ॥ १ ॥

इत्यनेनापि दत्तहस्तावलम्बनेन तस्य सुदृढीकृतत्वाच्च। किञ्च, इदंशब्दव्यतिरिक्तोऽकारान्तोऽपि इमशब्दोऽस्ति, तस्यैव तृतीयाबहुवचने निर्बाधं 'इमैः' इति प्रयोगस्य संसिद्धिः। न चाऽकारान्त इमशब्दः कुत्रापि नोपलभ्यत एवेति वाच्यम्, पाणिनिव्याकरणस्यैव "प्रत्नपूर्वविश्व—इमात्-" (५।३।१११) इति सूत्रे तन्निर्देशस्य व्यक्तं वीक्ष्यमाणत्वात्। नाप्ययं छान्दस एव शब्दः, तेन सूत्रेण थाल्प्रत्ययस्यैव च्छन्दसि विधानेन इमथा इति प्रयोगस्यैव च्छान्दसत्वात्, प्रकृतेस्तु इमशब्दरूपायाः प्रत्नादिशब्दवच्छुद्धसंस्कृतस्वरूपत्वात्। न चैवमपि तत्रार्थासङ्गतत्वप्रसङ्गः, इमशब्दस्याऽपि इदंशब्दसमानार्थकत्वेन तदर्थस्य तत्र सुघटत्वात्, तत्सूत्रस्यैव वृत्तिं कुर्वता हरदत्तमिश्रेणाऽपि पदमञ्जर्यामेवमेवाभिप्रेतत्वात्; तथा च तत्पाठः "इमशब्दः इदमा समानार्थः प्रकृत्यन्तरम्" इति। न चेदं रूपमर्थतोऽप्येतत्सदृशमन्यत्र महाकाव्ये कविभिर्नैव व्यापारीत्यपि वक्तुमुचितम्,[1]

"स्वार्थं तद् वितनोम्यहं किमधुना व्यर्थैर्विकल्पैरिमैः" (१६-२९५)

इत्यत्राऽपि तद्व्यवहारदर्शनात्। एतेन तत्प्राकृतत्वप्रतिपादनमपि नितरां निराकृतम्।

---

१ श्रीशान्तिनाथमहाकाव्येऽपि।

एवं व्याकरणेन निःशङ्कं निष्पन्नमन्यकविभिरप्याहृतं च 'इमैः' इति प्रयोगं कुर्वाणं सूरिवर्यं 'व्याकरणापेक्षयाऽतिविरुद्धत्वेनेदं महद् दूषणम्' इति नितान्तमिथ्योल्लेखेनाऽऽक्षिप्यतोऽस्य पाश्चात्यविदुषो र्लेखनी कथमिव किञ्चिदपि सङ्कोचं नाकार्षीत् ?, कथं वा स्वयं निजे पादे कुठारं प्रक्षिपन्तमनुकुर्वता, वस्तुतः स्वस्य जैनाऽज्ञानप्रसारकत्वमेव निर्धारयता, एतत्पुस्तकं प्रकाशयता श्रीजैनज्ञानप्रसारकमण्डलेन सा ( आक्षेपकलेखिनी ) समुत्तेजिता ?, इति नैव विज्ञातुं शक्यते।

यत्पुनः प्रस्तावकमहाशयेन तस्यैव प्रस्तावनायामाक्षेपविवर्जितं तत्तदाचार्येतिहासादिस्वरूपं निरूपितम्, तदप्यनालोचितमेव, स्थलाभावेनाऽधिकृताऽसङ्गतत्वेन त्वत्र तदुपेक्ष्य यथावकाशमन्यत्रैव विस्तरेण समालोचयिष्यते, प्रसङ्गवशेनाऽत्रापि किञ्चित् पुरतः प्रतिपादयिष्यते चेति।

इत्थं चेतस्ततश्चक्षुःक्षेपेण साक्षाल्लक्ष्यमाणां मिथ्याक्षेपतत्परैः कैश्चित् पाश्चात्यैः, वाह्याडम्बरविडम्बितैश्च स्वयं जैनैरपि विधीयमानां केनाऽप्यप्रतिविधीयमानां च परितः शास्त्रावनतिमवलोक्य कः सत्याग्रही सहृदयः स्वहृदये दुःखं नोपलभेत ?, कश्च शासनहितैषी तामुन्नतिरूपेणाऽङ्गीकृत्य संतोषमुद्भावयेत ?, को वा विचारचारुचेतास्तन्निराकरणायोचितं प्रयत्नमावश्यकं नावबुध्येत ? । इति तत्तद्विषयान् ग्रन्थान् यथातथं प्रकाशयितुं सुविहितसुगृहीतनामधेयैः परोपकारैककर्तव्यनिरतैरस्मद्गुरुभिः शास्त्रविशारदजैनाचार्यपदवीमलंकुर्वद्भिः श्रीविजयधर्मसूरिभिर्महता परिश्रमेणेयं श्रीयशोविजयजैनग्रन्थमालोदपाद्यत । यस्यामद्यावधि व्याकरण—न्याय—काव्येतिहासादिविविधविषयाणामेकोनविंशतिर्ग्रन्थरत्नानि प्राकाश्यमधिश्रितानि । अथैतच्छ्रीशान्तिनाथचरित्रं नाम महाकाव्यरूपं विंशं ग्रन्थरत्नमपि प्रकटीक्रियते, यद् महाकाव्यपरत्वेऽस्यां प्रथमत्वमेवाऽश्नुते ।

विनिर्मातारश्चास्य श्रीतपागच्छगगनाङ्गणगगनाध्वगाः श्रीपेरो-

---

१ प्रशस्तौ श्लो—९.

जराजेन्द्रसभासमासादितसंमानना महाकवयः श्रीमुनिभद्रसूरयोऽभूवन्। तैर्ग्रन्थस्याऽस्य प्रणयनं विक्रमार्काद् १४१० संवत्सरे व्यधायि, इत्येतत्प्रशस्तिप्रान्तप्राप्तेन

"अन्तरिक्षरजनीहृदीश्वरब्रह्मवक्त्रशशिसंख्यवत्सरे।
वैक्रमे शुचि तपोजयातिथौ शान्तिनाथचरितं व्यरच्यत" ॥१७॥

अनेन पद्येन समवगम्यते। विनिर्णीयते चैतेन चतुर्दशशताब्धन्तरूपः पञ्चदशशताब्द्यादिभूतश्चैतेषां ग्रन्थग्रन्थकानां स्फुटमेव सत्तासमयः।

अधिकृतं चात्र समूलमुन्मूल्य शाश्वतशर्ममर्मभित्कर्ममहामहीरुहसमूहम्, तूर्णमुत्तीर्य विशालासारसंसारापारपारावारम्, सम्यक् संप्राप्याऽपरप्राणिदुष्प्रापां परां काष्ठामधिष्ठितां परमेष्ठिताम्, ऐकान्तिकाऽऽत्यन्तिकैकसौख्यसौधमध्यमध्यासीनानां धर्मचक्रवर्तिनां श्रीशान्तिनाथभगवतां सम्यक्त्वाप्तिभवतः प्रारभ्य निर्वाणावधि विविधरसाधायि पवित्रताकरं चरित्रम्। उपनिबद्धानि चान्यान्यपि प्रासङ्गिकानि चेतोऽमन्दानन्दविधायीनि सरसमुपवर्णितानि कथान्तराणि।

एभिश्च ग्रन्थकर्तृभिर्मुखप्रतिमुखादिसन्धिसौन्दर्यं परिपुष्णद्भिः, विचित्रां वचनरचनां प्रपञ्चयद्भिः, दुष्करयमकालङ्कारमयं सर्गमप्युपन्यस्यद्भिः, ऋतुनगरारामविहारपर्वतार्णवादि यथोचितं परिवर्णयद्भिः, रसस्वरूपानुरूपसंदर्भं च वितन्वद्भिः कविपुरन्दरायमाणैः सर्वत्रापि रससुधाधाराऽविघातिन्या सहृदयहृदयहृदयङ्गमया सुसंबद्धपद्धत्या निर्वर्तितो ग्रन्थोऽयं महाकाव्यपङ्क्तावुत्तमं स्थानमुपलम्भितः, आपादितश्चान्येषु महाकाव्येषु भूयो लब्धप्रसरमप्यप्रस्तुतवस्तुविस्तराभिधानं दूषणं दूरमुत्सारयद्भिस्ततोऽपि शोभातिरेकम्।

यद्यप्येतेषां सूरिवराणामेतदतिरिक्तग्रन्थविरचितौ साधकं वा बाधकं वा किञ्चिदपि क्वचिदप्यद्यावधि प्रमाणं नोपलब्धम्, तथापीदमेकमपि सुमनोमनोहरं महाकाव्यं स्वान्यथानुपपत्त्या कर्तृणां निसर्गप्रतिभाप्रकर्षं, अन्यान्यशास्त्रसुनिष्णातत्वं च निर्बाधमनुमापयति।

स्पष्टयन्ति चैतत् तदानींतनाः श्रीदेवेन्द्रसूरयोऽपि स्वकृतप्रश्नोत्तररत्न-मालायाः संशोधकत्वेनैतानेव पूज्याचार्यवर्यान् निर्दिशन्तस्तत्प्रशस्तौ–

"तस्यानुजेन देवेन्द्रसूरिणा विक्रमार्कतः ।
नन्दयुग्मपयोराशिशशाङ्कप्रमवत्सरे ॥ १७ ॥
प्रश्नोत्तररत्नमाला विवृत्तिर्विदधे मुदा ।
शोधिता च लसद्भद्रैः श्रीमुनिभद्रसूरिभिः" ॥ १८ ॥

एतस्य श्रीमुनिभद्रसूरिविरचितस्य श्रीशान्तिनाथमहाकाव्यस्य मुद्रणावसरे श्रीभावनगरसंघभाण्डागारसंबन्धि प्राचीनं शुद्धतरं चादर्शपुस्तकमेकं प्रापयितुर्महामहिम्नस्तस्य श्रीसंघस्य महोपकारः स्वीक्रियते ।

अन्यान्यपि यान्यपरापराचार्यवर्यविरचितानां श्रीशान्तिनाथचरित्राणां पुस्तकान्यत्रोपयुक्तानि तानि, तदर्पयितॄणां महाशयानां धन्यवादपुरस्सरं नामानि च प्रकटीक्रियन्ते–

१ श्रीशान्तिनाथचरित्रम्, प्राकृतम्, श्रीहेमचन्द्राचार्यगुरुभिः श्रीदेवचन्द्रसूरिभिः प्रणीतम्[1] । श्रेष्ठिवर्यहालाभाईतनुजभोगीलालद्वारा श्रीअणहिल्लपुरपत्तन(पाटन)स्थस्य 'फोफलीयावाडा आगलीशेरी' इत्यस्य भाण्डागारस्य ।

२ ,, संस्कृतम् (त्रिषष्टिशलाकापुरुषचरित्रान्तर्गतम्) श्रीहेम-

1 यच्छ्रीत्रिषष्टिशलाकापुरुषचरित्रप्रशस्तौ श्रीहेमचन्द्राचार्या एव—
" शिष्यस्तस्य च तीर्थमेकमवनेः पावित्र्यकृज्जङ्गमं
स्याद्वादत्रिदशापगाहिमगिरिर्विश्वप्रबोधार्यमा ।
कृत्वा स्थानकवृत्तिशान्तिचरिते प्राप्तः प्रसिद्धिं परां
सूरिर्भूरितपःप्रभाववसतिः श्रीदेवचन्द्रोऽभवत् ॥ १४ ॥
आचार्यो हेमचन्द्रोऽभूत् तत्पादाम्भोजषट्पदः ।
तत्प्रसादादधिगत—ज्ञानसंपन्महोदयः" ॥ १५ ॥
एतेन श्रीहेमचन्द्रप्रभूणां समय एवैतेषामपीति सुनिश्चितम् । प्रभुसमयश्च विक्रमार्काद् द्वादशशताब्दीरूपः सुप्रसिद्ध एव ।

-चन्द्राचार्यैर्विरचितम् । भावनगरश्रीजैनधर्मप्रसारकसभया मुद्रितम् ।

३ „ „ राजगच्छीयश्रीमाणिक्यचन्द्रसूरिरचितम् । श्रीपादलिप्त(पालीताणा)नगरस्थवीरबाईपाठशालाभाण्डागारस्य ।

४ „ „ श्रीपूर्णिमागच्छीय-अजितप्रभसूरिग्रथितम् । प्रारम्भत एवास्यां ग्रन्थमालायां सर्वथा साहाय्यं वितरीतृभिर्विद्वद्वर्यैर्मुनिराजश्री-इन्द्रविजयमहात्मभिः संपादितम् । कलिकाताया एसियाटिक्समाजेन प्रकाशितम् ।

५ „ „ श्रीमुनिदेवसूरिविनिर्मितम् । अस्मद्गुरुवर्यश्रीशास्त्रविशारदजैनाचार्यविजयधर्मसूरीणाम् ।

---

१ एभिरेव काव्यप्रकाशस्य विद्वत्तापूर्णा सुविख्याता संकेतनाम्नी टीकाऽकारि । एतेषां समयश्च त्रयोदशशताब्द्यात्मक इति तैरेव विहितस्य श्रीपार्श्वनाथमहाकाव्यस्य प्रशस्तिगतेन

"रसर्षिरविसंख्यायां समायां दीपपर्वणि ।
समर्थितमिदं वेला-कूले श्रीदेवकूपके" ॥ १ ॥

इति पद्येन व्यक्तं विनिश्चीयते ।

२ एतन्निर्माणसमयस्तु—

"त्रयोदशस्वब्दशतेष्वतिक्रान्तेषु विक्रमात् ।
वर्षे सप्तोत्तरे वैशाखस्य पक्षे च निर्मले" ॥ १ ॥

इति तत्प्रशस्तावेव निर्णीतो ग्रन्थकर्तृभिः ।

३ यत्तु प्रद्युम्नसूरिविरचितस्य समरादित्यसंक्षेपस्य प्रस्तावनायां H. Jacobi पण्डितः "Devasuri his Upamitibhavaprapanchakathasaroddhara (in Samvat 1298) and his Santinathacharita,"—इत्यादिना देवसूरिकृतं उपमितिभवप्रपञ्चाकथासारोद्धारं श्रीशान्तिनाथचरित्रं च प्रद्युम्नसूरिर्व्यशोधयत् इति ज्ञापयति, प्रमाणयति चैतेन श्लोकेन—

"यो वादीश्वरदेवसूरिसुगुरोर्मूलक्रमे सूरिणा
चक्रे श्रीमदनेन्दुना निजपदे तेनाप्रवृत्तश्रिता ।
काव्ये श्रीमुनिदेवसूरिकविना श्रीशान्तिवृत्ते कृते
श्रीप्रद्युम्नमुनीन्दुधीरुचिशुचिः सर्गोऽगमत् सप्तमः" ॥ १ ॥

तच्चिन्त्यम् । प्रद्युम्नसूरिसंशोधितस्य शान्तिनाथचरित्रस्य श्रीमुनिदेवसूरि-

६ ,, ,, गद्यात्मकम्, श्रीभावचन्द्रसूरिगुम्फितम्, पंन्यासश्रीकमलविजयानाम्।

७ ,, गूर्जरभाषानिबद्धं पद्यात्मकम्, पण्डितरामविजयमुनिविहितम्। श्रा०—भीमसिंह—माणेकेन मुद्रितम्।

तदेवमनेकग्रन्थाधारेण संशोध्य विषमस्थले टिप्पनादिना विशदीकृत्य च महता परिश्रमेण संपादितेऽस्मिंश्चित्ताह्लादके पुस्तकेऽङ्गीकुर्वन्तु नयनार्पणप्रयासं विद्वांसः, व्यवस्यन्तु सततमभ्यासाय व्युत्पत्तिमिच्छवः, संसृजन्तु भृशमादरं भगवद्गुणैकपक्षपाताः, सफलयन्त्वेवमस्मत्परिश्रमम्, विशोधयन्तु च दृष्टिदोषनिबन्धनानि वा, अज्ञानसहभावीनि वा, अक्षरयोजकसंभवीनि वा यत्र कुत्रचन स्थितानि स्खलनानि सौहार्दावदातहृदया इति

प्रार्थयेते—

हरगोविन्द-बेचरदासौ।

भिरेव विनिर्मितत्वात्, न तु देवसूरिभिः; अनेन श्लोकेनापि श्रीमुनिदेवसूरीणामेव तत्कर्तृत्वस्य प्रतिपादनात्,

"पूज्यश्रीमुनिदेवसूरिरचितश्रीशान्तितीर्थेश्वर-" (पृ-३५४)

इत्येवमत्रापि तत्संवादस्य समासादनाच्च। श्रीदेवसूरेस्तु ग्रन्थकर्तॄणां मुनिदेवसूरीणां प्रगुरुत्वात्, तेनैव श्लोकेन तदर्थस्याप्युपलभ्यमानत्वात्। एवं यदुपमितिभवप्रपञ्चकथासारोद्धारस्यापि कर्तृत्वेन देवसूरेः प्रतिपादनम्, तदपि विचारणीयमेव, श्रीदेवेन्द्रसूरीणां तत्प्रणेतृत्वात् (see 6th Report by Peterson page X)

१ "संवत् सत्तर पंचासीआ वर्षे वैशाख मास कहाया।
शुदि सप्तमी गुरु पुष्य संयोगे पूरण कलश चढाया" ॥ १ ॥

इत्यन्तिमपद्येन तन्निर्माणसमयो विक्रमार्काद् १७८५ इति निर्णीयते।

अर्हम्

श्रीविजयधर्मसूरिभ्यो नमः ।

श्रीमुनिभद्रसूरिरचितम्—

# श्रीशान्तिनाथचरितम् ।

प्रभाकरो यः परमः कलानिधिर्य एव यस्मादपरो न पावकः ।
विभाति यद्भाभिरिदं चराचरं जिनाय तस्मै परमात्मने नमः ॥ १ ॥
गणान्वितश्चन्द्रकलां बिभर्ति यः समाश्रितश्चक्रिवरेण भोगिना ।
शिवाश्रयो भूरिविभूतिरेष वः श्रियं स पुष्याद्वृषभध्वजप्रभुः ॥ २ ॥
समासदद् यत्पदपर्युपासनात् कलानिधेर्मण्डलमध्यवर्तिताम् ।
मृगस्तिरश्चां प्रथमोऽपि सन्ततं स शान्तिनाथः शिवतातिरस्तु वः ॥ ३ ॥
पिता भवेत्पुत्र इति श्रुतिश्रुतं यथार्थमर्थं रचयन्निवाजनि ।
समुद्रजातोऽपि समुद्र एव यः स्वलक्ष्मशङ्खाश्रयणात् सलक्षणः ॥ ४ ॥
शिवाङ्गसङ्गात्कलयन्नपि स्फुटं कुमारतां यश्च जितान्तराहितः ।
चकार चित्रं किल तारकोदयं नमोऽस्तु तस्मै जगदीशनेमये ॥ ५ ॥
(युग्मम्)
उपास्यते भोगिभिरेव चक्रिभिः समन्ततश्चन्दनवत्सदैव यः ।
भवाधितापव्यपरोपणक्षमः स पार्श्वनाथस्तनुतां सुखानि वः ॥ ६ ॥
न वेद सिद्धार्थभवोऽपि यः स्वयं चकार सिद्धार्थभवत्वमात्मनः ।
सुसंवरः संवरवैरिनिर्जयात् स संमदं वीरजिनस्तनोतु वः ॥ ७ ॥
सुधाशनाध्यासनजातकीर्तयः स्फुरद्वृषालम्बनचा (रु) रुमूर्तयः ।
मनःसमीहापरिपूर्तये भृशं समेऽपि वः सन्तु परे जिनेश्वराः ॥ ८ ॥
स्वयं समस्ता अपि लब्धयो वरं समेत्य रत्नाकरमापगा इव ।
परस्परस्पर्धितयेव यं श्रिताः स गौतमः संचिनुतां शुभानि वः ॥ ९ ॥
जगत्त्रिपद्या परितोऽनवद्यया कयाऽपि यः श्रीपतिवद्व्यगाहत ।
अनन्तधामा गणभृद्विशेषकः प्रसत्तये मे भवतात्स गौतमः ॥ १० ॥
चतुर्विधं सङ्घमशेषभावुकप्रसारवल्लीवनसारिणीन्निभाः ।

इमा गणाधीशसुधर्मदेशनागिरश्चिरं पान्तु निपातितांहसः ॥ ११ ॥
यदीयपारं सुगमं विपश्चितां न पुण्यपोतं प्रविहाय केवलम् ।
जिनेन्द्रचन्द्राभ्युदये कथं न स श्रुताम्बुधिर्वृद्धिमुपैतु नित्यशः ? ॥ १२ ॥
अतिष्ठिपन्निर्वृतिमङ्गनाजने विजित्य ये दिक्पटमागमोक्तिभिः ।
विवादविद्याविदुरं वदावदा जयन्ति तेऽमी प्रभुदेवसूरयः ॥ १३ ॥
सिताम्बराणामपि यैश्च दर्शनं स्थिरं कृतं गूर्जरभूमिमण्डले ।
चलाचलं दिक्पटवादवात्यया मनोमुदे ते मम देवसूरयः ॥ १४ ॥
प्रवादविद्याजितदेवसूरये चरित्रविद्योतितदेवसूरये ।
स्वदेशनारञ्जितदेवसूरये नमोनमः श्रीगुणभद्रसूरये ॥१५॥
क्षमाधरेभ्यः कमलोत्तमाश्रया समुच्चगोत्रेभ्य इवोल्लसद्रसा ।
बभार येभ्योऽभ्युदयं सरस्वती महाशया ग्रन्थकृतो जयन्ति ते ॥ १६ ॥
निसर्गकारुण्यनिवासभूमयः परार्थनिर्माणनिबद्धचेतसः ।
असंस्तुतस्यापि रता गुणस्तुतौ चिराय ते केऽपि जयन्ति साधवः॥ १७ ॥
पुरस्सरा धार्मिकलोकसंहतेः परं न ये कुत्रचनापि हिंसकाः ।
सुपर्वपक्षाश्रयिणोऽपि निश्चितं नमोऽस्तु सद्भ्यो भुवि तेभ्य एव मे ॥ १८ ॥
परस्य सन्तापमपाकरोति यः स्वजीवनेनापि नभस्यमेघवत् ।
करोति यो वा सुमनोऽभिवर्द्धनं न सज्जनः कस्य मुदं तनोति सः ? ॥ १९ ॥
न पूर्णचन्द्रेण सतो विनिर्मितिर्जगत्त्रयाह्लादकृतोऽपि शङ्क्यते ।
कलङ्किता हेतुगता तथा सति प्रवर्तमाना कथमत्र वार्यताम् ? ॥ २० ॥
सतोऽन्यसन्तापहृतोऽपि तर्क्यते न चन्दनेनापि विधानकल्पना ।
यतो न काठिन्यमवेक्ष्यतेतरां नचात्र हृद्ग्रन्थिरवाप्तघर्षणः ॥ २१ ॥
महीयसामाश्रयसन्निधानतो भवेल्लघीयानपि गौरवास्पदम् ।
गजाननं पूजयता जनेन किं न पूज्यते यानममुष्य मूषकः ? ॥ २२ ॥
जडोऽपि निर्व्याजमहत्त्वभाजनं जनः क्षणादेव गरिष्ठसंश्रयात् ।
निधीयते मूर्द्धसु कैर्न वा जलं सुरापगाया अपि कश्मलाविलम् ? ॥ २३ ॥
न सज्जनस्य स्तवनीयताविधौ स्पृशत्ययं सज्जन एव योग्यताम् ।
यतः स्वभावादपि तौ परस्परं गुणान् ग्रहीतुं स्वत एव सोद्यमौ ॥ २४ ॥
ततः प्रशस्यः परमत्र दुर्जनः परोपकारप्रवणः स्वभावतः ।
ग्रहात्समादाय निबद्धदूषणं समुज्ज्वलं यः कुरुतेतरां परम् ॥ २५ ॥

गुणानगृह्णन् यदि निन्द्यते खलः कथं न मातापितरौ तथास्थितौ ?।
अथापरस्येति विशेषणादिदं न वाच्यमालिङ्गति तर्हि तुल्यता ॥ २६ ॥
विमुच्य यः स्नेहमँवञ्चनास्थितं दधाति मूर्तिं सहसा मलाविलाम्।
निजक्षये पोषणमाचरन् गवां खलः कथङ्कारमयं न वर्ण्यताम् ? ॥ २७ ॥
न च क्षमायामपि मूलमुन्नतं यदीयमिष्टं सुमनःफलं न, सा।
प्रवर्द्धमाना खलता निरर्गलं सचेतसः कस्य न विस्मयावहा ? ॥ २८ ॥
यथास्थितं दोषमुदीरयन्नयं न साधुभावं भजतां कथं खलः ?।
यथार्थवादेन वदन्ति साधुतां विधूतमात्सर्यभरा हि धीधनाः ॥ २९ ॥
ममापि शान्तेश्चरितं मनोहरं प्रकुर्वतः षोडशधर्मचक्रिणः।
प्रपञ्चतः पञ्चमचक्रवर्तिनः प्रसीदतां सज्जनदुर्जनाविमौ ॥ ३० ॥
मनस्यवस्थाप्यमहो मनीषिभिः कचित्प्रकाश्यं न रहस्यमादरात्।
प्रकाश्यते यन्मयका कथञ्चन प्रभोः प्रभावः स तु तस्य केवलम् ॥ ३१ ॥
स कोऽपि नैवास्ति गुणाद्भुतः क्वचिद् यकोऽपि विश्वस्य भवेत्प्रियङ्करः।
सुधाकरोऽप्यभ्युदितः प्रमोदयेत् चकोरचक्रं न च चक्रमण्डलम् ॥ ३२ ॥
भवन्ति पापानि नृणां न साम्प्रतं चिरन्तनानि प्रलयं व्रजन्त्यपि।
पराणि विन्दन्त्युदयं न भावतश्चरित्रमात्रश्रवणादिहार्हताम् ॥ ३३ ॥
अतो मयाऽपि प्रयतेन कीर्त्यते जिनेशशान्तेश्चरितं यथामति।
जडत्वजम्बालनिरासनामृतं कुकर्महालाहलनाशनामृतम् ॥ ३४ ॥
तथाहि जम्बूपपदं विशालतां दधानमारामवदुन्नताचलम्।
समस्ति सद्द्वीपमनूनवृत्ततासमाश्रयं मानसवन्मनस्विनाम् ॥ ३५ ॥
जिनेन्द्रवद्योजनलक्षमानतां दधत्क्षमाभृद्भिरितस्ततः श्रितम्।
समृद्धवर्षानुगतं पयोदवत्समुद्रवद् द्वीपवतीभिरञ्चितम् ॥ ३६ ॥
(युग्मम्)
तदन्तरस्त्यर्द्धशशाङ्कसन्निभं सदादिमं क्षेत्रमकृत्रिमाकृति।
अभिख्यया तद्भरतं प्रथामगादभिख्ययेव प्रथमस्य चक्रिणः ॥ ३७ ॥
प्रभाढ्यवैताढ्यमहीभृता द्विधा कृतं च पूर्वापरसिन्धुगामिना।
जिनेन्द्रचैत्याश्रयणादिवोच्चतां प्रविभ्रता दक्षिणमुत्तरं च तत् ॥ ३८ ॥
दलेऽस्ति याम्ये किल तस्य विश्रुतं महीमहेलाऽऽस्यतमालपत्रकम्।

---

१ अपां जलानामञ्चना क्षेपस्तत्र तया वा स्थितो यः स तथा खलपक्षे।

त्रिविष्टपश्रीप्रतिबिम्बभावनाऽनुमापकं रत्नपुरं महापुरम् ॥ ३९ ॥
सरांसि यस्मिन् समवेक्ष्य मन्वते न मानसं हंससमाश्रयं जनाः ।
कदापि लौकायतिका इवायतं प्रभूतशक्त्याऽभ्युपगम्य विग्रहम् ॥ ४० ॥
सदाफलानोकहराजिराजितान्युदस्तसन्तापभराणि दैशिकाः ।
विलोक्य यत्रोपवनानि नन्दनं न चाद्रियन्ते धृतकल्पपादपम् ॥ ४१ ॥
न ते द्रुमा यत्र सुमानि येषु नो सुमानि नो तानि फलानि येषु न ।
फलानि नो तानि न येषु सन् रसो रसः स न न्यक्कुरुते मधूनि यः ॥ ४२ ॥
गृहे गृहे यत्र महेश्वरा जनाः शिवाश्रया भूतगणाधिनायकाः ।
न भीमरूपा न कदाऽपि शूलिनो न ये पशुस्वामितया प्रकीर्तिताः ॥ ४३ ॥
धनानि यस्मिन् धनिनां महीयसां पयांसि यस्मिन् सरसां प्रथीयसाम् ।
फलानि यस्मिन् विपुलानि भूरुहां परोपकाराय भवन्ति सन्ततम् ॥ ४४ ॥
न पिण्डमिच्छन्त्यपि चाटुकोटिभिर्न संसजन्ति स्ववशां वशां नये ।
विशिष्टगुर्वङ्कुशशङ्कितान्तरा महर्षयो यत्र मतङ्गजा इव ॥ ४५ ॥
सुवर्णकुम्भा भविकैर्निवेशिता विभान्ति यत्रार्जुनचैत्यसानुषु ।
नभःस्रवन्त्या इव चक्रवाकका: सुवर्णपाथोरुहनिश्चलासनाः ॥ ४६ ॥
रसातलं यस्य गभीरखातिकाप्रसक्तमाजीवनमार्प्पयन्निजम् ।
न किं प्रयच्छन्ति निबद्धमानसा मनस्विनीषु प्रसभं मनस्विनः ? ॥ ४७ ॥
क्रयाणकं भूवलये तदस्ति नो न यद्यदट्टेषु विलोक्यते जनैः ।
भवन्ति तेजांसि विभाकरे न चेत् परः समीक्ष्यः क तदा तदाकरः? ॥ ४८ ॥
प्रसारितं रत्नभरं यदापणे निरीक्ष्य कान्तिप्रसरैः परिष्कृतम् ।
स रोहणक्षोणिधरोऽपि संभ्रमाच्छिलाऽवशेषः परिभाव्यते परम् ॥ ४९ ॥
न वैजयन्त्यो मृदुमारुताहता यदीयसौधोपरि बन्धुरा इमाः ।
पुरश्रिया वर्द्धितमानसंपदो दिवं समाह्वातुमिवाधिकोच्छ्रयाः ॥ ५० ॥
निजेश्वरश्रीपातिनामशङ्कया निषेवते यत्किल भोगिनां पतिः ।
सुधीभवन् कुण्डलशायितां दधत्समुज्ज्वलस्फाटिकवप्रदम्भतः ॥ ५१ ॥
अनन्तलक्ष्मीपुरुषोत्तमालये निरीतिभावप्रसरन्महोत्सवे ।
पयोनिधिर्यत्र स खातिकामिषात्स्वपुत्रिकाप्रेमवशम्वदोऽवसत् ॥ ५२ ॥
मतङ्गजाञ्जनपर्वतायतान्सलीलयातानि पथि प्रकुर्वतः ।
निरीक्ष्य यत्रेति विजानते जना न सन्ति नान्यत्र भवन्ति चैतके ॥ ५३ ॥

ध्वजांशुकैः शारदसारकौमुदीसमप्रभैः शर्मविसारिसम्पदा ।
अधिष्ठितं यत्र विमानतायिनां पुरं सुराणां हसतीव संमदात् ॥ ५४ ॥
( षोडशभिः कुलकम् )

बभूव तस्मिन्नरमौलिशेखरः स कोऽपि षेणः क्षितिजीवितेश्वरः ।
यदाख्यया श्रीपदमादितः कृतं किमादिभूतं न न भूतमत्र तत् ॥ ५५ ॥
सुदुःसहं धाम न सोढुमीश्वरा विरोधिनो यस्य दरीषु भूभृताम् ।
अवात्सुरुत्सृष्टनिवासभूमयो निलीय घूका इव भानुमालिनः ॥ ५६ ॥
जलेश्वराशालयभावमाश्रयन्नितान्तपूर्वोदय एव भानुमान् ।
हरित्सु सर्वासु विवृद्धिधारिणो न यत्प्रतापस्य समानतां दधौ ॥ ५७ ॥
शरत्सुधांशुभ्रमभारकारिभिर्विनिर्जितो यस्य यशोभिरुज्ज्वलैः ।
भुजङ्गमानामधिपो रसातलं प्रविश्य नूनं त्रपयेव तस्थिवान् ॥ ५८ ॥
चतुष्पयोनिध्यवधिक्षितीश्वरैः प्रणम्यमानस्य सदैव देववत् ।
श्रुतेक्षिता यस्य विभोरजायत क्षमासमासङ्गवशादिव क्षमा ॥ ५९ ॥
अजस्रविश्राणनकर्मणाऽर्थिनां सुवर्णकोट्या विरचय्य योऽर्थिताम् ।
जहार दीनत्वविधानलालसां जनुः कृतार्थं रचयन्निवार्थिताम् ॥ ६० ॥
कृपापरोऽपि श्रुतवानपि क्वचिन्न धर्मविच्छेदकरं ररक्ष यः ।
नृपस्य हि न्यायपथप्रवर्त्तिनो न धर्मविप्लावकपालने मतिः ॥ ६१ ॥
( सप्तभिः कुलकम् )

सधर्मचारिण्यभिनन्दिताऽभिधा महेश्वरस्याजनि सर्वमङ्गला ।
शिवस्य तस्य प्रतिपद्धतो यथा महेश्वरस्याजनि सर्वमङ्गला ॥ ६२ ॥
परोऽपि जज्ञे शिखिनन्दिता परा परास्तकामप्रसरस्य तस्य च ।
रसेश्वरस्येव सुरापगा प्रिया रजोऽपहा पुण्यनिदानजीवना ॥ ६३ ॥
सहैव ताभ्यामवनीशितुर्मुदा सदाऽपि भोगानुपभुञ्जतः सतः ।
विशुद्धधर्मार्थनिविष्टसंविदो दिना व्यतीयुर्बहवः क्षणा इव ॥ ६४ ॥
अथान्यदा देव्यभिनन्दिता यथासुखं शयाना शयने निशात्यये ।
सुधांशुभास्वद्युगपन्मुखाम्बुजप्रवेशसंस्वप्नमसौ निरैक्षत ॥ ६५ ॥
अवाप्य सा स्वप्नमनिन्दितं सतां शुभैरवाप्यं परिहृष्टमानसा ।
फलानि पुष्पाणि च पाणिपुष्करे निवेश्य कान्तं समया समापतत् ॥ ६६ ॥
समर्पयन्ती फलपुष्पसञ्चयं स्वपञ्चशाखाग्रजपल्लवेन सा ।

विशालपात्रोपगता महीभुजा व्यभान्यतारं व्रततीव तत्क्षणम् ॥ ६७ ॥
निषेदुषी काञ्चनविष्टरे स्थिरे नरेश्वरेणात्मकरेण दर्शिते ।
समुद्गिरन्तीव रसं सुधामयं जगाद कल्याणकिरं गिरं च सा ॥ ६८ ॥
अतिम्रदीयस्तमहंसतूलिकासनाथशय्यातलभागभागिनी ।
विभो! प्रमीलासुखमाश्रयन्त्यहं मनाग्विबुद्धा मुदिता व्यलोकयम् ॥ ६९ ॥
यशःप्रतापाविव ते महीपते! परस्परं संमिलितावुपागतौ ।
तदैव पीयूषकरप्रभाकरौ निरस्तनिष्पिष्टतमश्चयौ रुचा ॥ ७० ॥
प्रसद्य सद्यस्तदमुष्य मे फलं निवेद्यतां वेद्यविवेदकोविद! ।
न सुभ्रुवां तत्त्वविवर्त्तवर्तनी प्रवर्तिनी खल्ववलोक्यते मतिः ॥ ७१ ॥
निपीय तस्या वदनेन्दुसंभवं वचोऽमृतं क्ष्मापतिरभ्यधादिति ।
शुभे पुरा सञ्चितपुण्यसञ्चये त्वयोदितस्वप्नफलं निशम्यताम् ॥ ७२ ॥
यशोविनिर्धूतसुधांशुमण्डलौ प्रतापसन्तर्जितसूरमण्डलौ ।
वसुन्धरामण्डलमण्डने श्रिया भविष्यतस्ते तनयौ नयोज्ज्वलौ ॥ ७३ ॥
इतीरितं स्वप्नफलं प्रियेण सा निशम्य सम्यक्परिभूतसंशया ।
समास्त्विति स्पष्टनिवेदनोन्मदा निजांशुके ग्रन्थिनिबन्धनं व्यधात् ॥७४॥
तदादि गर्भं दधती व्यभादियं सुखेन पीयूषमिवेन्दुमण्डली ।
समग्रगोत्रोज्ज्वलतां प्रकुर्वती समुल्लसन्मौक्तिकतारहारका ॥ ७५ ॥
स्वभावतो राज्यपि मन्दगामिनी विशेषतो मन्थरतामुवाह सा ।
मदानुषङ्गात्करिणीव चाटुभिः प्रपद्यमानाऽशनभोगजं सुखम् ॥ ७६ ॥
दधार यं यं हृदि दौर्हृदं प्रिया महल्लकानां परिपृच्छतां मुखात् ।
विबुध्य तं तं वसुधासुधाकरः स पूरयामास सलीलमात्मना ॥ ७७ ॥
गतेषु मासेषु नवस्वनुक्षणं दिनेषु चार्द्धाष्टमयुक्षु सप्तसु ।
यथा सुमित्रा सुषुवे तथा यमौ शुभे मुहूर्त्ते नृपतिप्रियाऽपि सा ॥ ७८ ॥
स सौविदल्लैर्युगत्सुतद्वयप्रसूतिवर्द्धापनकेन वर्द्धितः ।
इदं न देयं भवतीति मानतो विवेद न प्रीतितरङ्गितो नृपः ॥ ७९ ॥
महोत्सवेषु प्रथितेषु सर्वतः सरत्सु किञ्चित्समया व्यतिक्रमम् ।
स इन्दुषेणं तनयं पुरैकक्कं परं पुनः प्राह च बिन्दुषेणकम् ॥ ८० ॥
कुशीलवाभ्यामिव मैथिलीपतिर्बुधोशनोभ्यामिव वासरेश्वरः ।
अयं रदाभ्यामिव गन्धसिन्धुरो वृतः सुताभ्यां परभागमाप सः ॥ ८१ ॥

प्रगल्भमानौ तनयौ दिने दिने महीपतेस्तावपि वृद्धिमापतुः ।
भृशं प्रसूलालनकर्मणाऽमुना नदीरयेणेव तटौ रसाप्लुतौ ॥ ८२ ॥
जनैरुपर्यासितुमादृताऽपि यत्स्थितिस्तु नीचैरनुधावति स्वयम् ।
जडेन तेनापि न कोऽपि संस्तवं करोति तृष्णापरितापवर्जितः ॥ ८३ ॥
सरस्वतीब्रह्मनिरासनस्थितेर्बकस्य हंसस्य च जीवनाशिनः ।
समैव येषु प्रतिपत्तिरीक्ष्यते जडाशयांस्तानपि कोऽभिवाञ्छति ? ॥८४॥
पुरन्दरस्य त्रिदिवेऽस्ति मानना भुजङ्गलोकेऽपि भुजङ्गमप्रभोः ।
प्रजासु किञ्चिज्जयिनः प्रजापतेर्बुधस्य सर्वत्र च बुद्धिशालिनः ॥ ८५ ॥
भवन्ति वश्या विषया बहिस्तना नृपस्य शस्त्रैरपरे न चान्तराः ।
द्वयेऽपि शास्त्रैस्तदयं विशारदैर्विशेष आकारकृतो विभाव्यताम् ॥ ८६ ॥
हृदा विचार्येति महीभुजाऽपि तौ महाकलाचार्यसमीपमापितौ ।
स शिक्षयामास कलाः कलाशयो गुरुश्च तांस्तौ विनयाद्ररञ्जतुः ॥ ८७ ॥
(पञ्चभिः कुलकम्)
समेत्य विद्याः सकलाः सिषेविरे नृपाङ्गजौ तौ विनयोपशोभितौ ।
स्वतोऽपि मासस्य च पक्षकावुभौ तुषाररश्मेरिव चारुचन्द्रिकाः ॥ ८८ ॥
समग्रविद्याकुशलौ महीभुजे समर्पितौ तौ गुरुणा कलाविदा ।
प्रकुर्वतां प्रश्नमुदारधीमतां दृढं हरन्तौ विषमार्थसंशयम् ॥ ८९ ॥
अदूष्यवैदुष्यमवेक्ष्य चैतयोस्तथा सुवर्णं विततार पार्थिवः ।
किमप्युपाध्यायवराय रञ्जितो द्विजन्मनां येन सुवर्णताऽजनि ॥ ९० ॥
क्षणं धनुर्वेदविशेषशिक्षया क्षणं कुमारौ विदुषां परीक्षया ।
क्षणं नृपोपासनया खलूरिकाश्रमेण कञ्चिद् गमयाम्बभूवतुः ॥ ९१ ॥
इतश्च विप्रो मगधोपवर्तनोत्तमाचलग्रामनिवासविश्रुतः ।
अपारशास्त्राम्बुधिपारदृश्वनां ललामभूतो धरणीजटोऽभवत् ॥ ९२ ॥
महेशमौलौ पदमादधाति यो बुधेन सार्धं विरुणद्धि यः क्षयी ।
किमश्नुते तद्व्यतिरिक्तलक्षणः स येन किञ्चित्समतां द्विजेश्वरः ? ॥ ९३ ॥
तदद्भुतं यन्नृपसौधतोरणे न्यधायि येनैकसुवर्णपत्रकम् ।
चकार रागं हृदि तन्महीभुजां विनैव चूर्णं विदुषां विरागताम् ॥ ९४ ॥
अनाप्नुवन् येन समानतां गुरुर्विवादकाष्ठां कलयन् बृहस्पतिः ।
प्रपद्य तत्रास्तिकभावमात्मनो दिवं समासद्य सजीवतां ललौ ॥ ९५ ॥
(त्रिभिर्विशेषकम्)

अभूद्यशःपूर्वपदा जनी पदाश्रिताऽपि भद्रा किल तस्य धीमती ।
उवास यस्या हृदि नैव मत्सरो भ्रमत्सरोषापरसंस्तवेऽप्यहो ॥ ९६ ॥
विवेकरत्नाभरणेन भूषितं यदीयमन्तःकरणं विदिद्युते ।
अवाप्तवाह्याभरणा शिवाऽपि यत्सरूपतामश्नुति न स्वरूपतः ॥ ९७ ॥
(युग्मम्)
तया समं भोगपरम्परामयं सुखं समास्वादयतो द्विजन्मनः ।
कियाननेहा व्रजति स्म यामवत्क्षणे क्षणे यः सृजति स्म संसदम् ॥ ९८ ॥
तयोरभूतां तनयौ सुलक्षणौ सुयुग्मजाताविव रूपसम्पदा ।
अभिख्ययाऽऽद्यः किल नन्दिभूतिकः परः पुनः श्रीयुतभूतिसंज्ञकः ॥९९॥
पराऽपि तद्वप्तुरभून्निकेतने सनातनश्रीभवदुग्रकेतने ।
अनेकनानाविधकर्मकर्मठाऽशठाऽपि दासी कापिलाऽभिधानतः ॥१००॥
सुतस्तदीयस्तदभिख्यया जनैरवाचि यत्तत्कपिलोऽत्र विश्रुतः ।
अहार्यमेधाभवनं सकृच्छ्रुतग्रहाग्रही संवरवैरिविग्रहः ॥१०१॥
निजाङ्गजावद्भुतरूपवैभवौ त्रयीमुखोऽध्यापयितुं त्रयीमयम् ।
परिश्रमं यं निरमादनुत्तरं स एष जज्ञे कपिले फलेग्रहिः ॥१०२॥
समीपवर्ती च स पारिचारिकस्तयोरधीतौ समजायताधिकम् ।
प्रमादसंदर्भविमर्दनोद्यताः प्रकुर्वते किं न गुणार्थिनः खलु ? ॥१०३॥
यथा यथा ऋग्गणसारणामिमौ कराङ्गुलीभिः कुरुतः स्म नोदितौ ।
तथा तथा कापिल एष मूकवत्तटास्थितः सर्वमबुद्ध बुद्धिभृत् ॥१०४॥
प्रपाठ्यमानावपि शाठ्यमानितौ हठेन पित्राऽपि मठेऽपि नन्दनौ ।
तथा न वेदार्थविशेषवेदिनावुपेक्षमाणोऽपि यथा स कापिलः ॥१०५॥
अधीत्य शास्त्राण्यभियोगयोगतश्छलेन केनापि गृहात्स निर्गतः ।
निरीक्ष्यमाणः सकलां वसुन्धरां क्रमात्पुरं रत्नपुरं समासदत् ॥१०६॥
प्रकाशयन् ब्राह्मणतां यथास्थितां विनिर्मितैर्द्वादशभिर्विशेषकैः ।
समुद्वरन् श्रावकतां गुरूदितैर्व्रतैरिवोपासक एव कश्चन ॥१०७॥
उभे वसानः स कषायवाससी वनोत्थमाध्याह्निकपुष्पसच्छवी ।
कषायतामाशयमध्यमास्थितां बहिर्विकृष्यैव निदर्शयन्निव ॥१०८॥
अनामिकायां दधदङ्गुलीयकं हिरण्मयं नव्यकुशोपशोभितम् ।
जनाय भक्त्या प्रणतिं प्रकुर्वते चिराय जीवेति शुभाशिषो ददत् ॥१०९॥

विवन्द्यमानः क्वचनापि वन्दिभिर्विनम्यमानः क्वचनापि बाहुजैः ।
वितर्क्यमाणः क्वचनापि वाणिजैः कुतोऽयमागादिति भापणोन्मुखैः ॥११०॥
अवापदध्यापकधुर्यसत्यकेर्मठं पठच्छात्रकुलैः समाकुलम् ।
अलब्धमध्यं जलराशिवज्जडैः सरस्वतीसन्ततिशालिभिर्वृतम् ॥१११॥
(पञ्चभिः कुलकम्)

तमापतन्तं समवेक्ष्य सत्यकिर्न्ययुङ्क्त पीठानयने बहूनयम् ।
स्वयं पुनः प्रत्युदियाय साधवः क्रमस्य निर्मान्ति नहि व्यतिक्रमम् ॥११२॥
तमासने सत्यकिरासयत्स्वयं विधाप्य पाद्यादिकमर्घ्यमादरात् ।
किमातिथेयाः समुपागतेऽतिथौ न तथ्यमातिथ्यमहो वितन्वते ?॥११३॥
स यावदध्यापकमौलिशेखरः प्रवर्तते प्रष्टुमिमं द्विजन्नुवम् ।
अये ! चतुर्वर्गफलोपपादके श्रमः क्व शास्त्रे तव पण्डितेति तम् ? ॥११४॥
स एव तावत्पठतामपृच्छतामपि व्यभैत्सीद्विषमार्थसंशयम् ।
सरस्वती वा यदि वा हरिप्रिया तिरोहिता तिष्ठति किं मनागपि ?॥११५॥
अपृच्छदध्यापक एव तं चिरान्मनःस्थितान् कांश्चन शास्त्रसंशयान् ।
विभेद तान् सोऽपि नदीप्रवाहवत् प्रवद्धमूलानपि मेदिनीरुहान् ॥११६॥
तमभ्यषिञ्चत्स्वपदेऽथ सत्यकिश्चमत्कृतश्चेतसि तस्य संविदा ।
न किं सपर्यां रचयन्ति धीमतां महानुभावा हि गुणानुसारतः ? ॥११७॥
समुद्य तच्छात्रसमुच्चयं बुधस्तथा कथञ्चित्कपिलोऽध्यजीगपत् ।
यथा स दुर्बोधपदार्थबोधनात् पुरातनस्य स्मरति स्म नो कवेः ॥११८॥
स्वरूपसन्तर्जितपुष्पसायकं त्रयीसमस्तार्थविशेषवेदिनम् ।
प्रवादविद्यापरिभूतगीष्पतिं सुवृत्तहेतुं कपिलं विलोक्य तम् ॥११९॥
कदाचिदध्यापकजीवितेश्वरा प्रतीतिमाप्ता किल जम्बुकाऽऽख्यया ।
रहः पतिं प्राह विचारचातुरी विरिञ्चिकन्याकमनीयकान्तिभृत् ॥१२०॥
(युग्मम्)

अपत्यवत्ता ननु सत्यभामया स्वचारुतानिर्जितसत्यभामया ।
तनूजया नौ विजयाङ्कभूतया स्मरस्य सुस्त्रैणललामभूतया ॥१२१॥
विवाहयोग्या यदि सा प्रदास्यते वराय कस्मैचन, तत्प्रदीयताम् ।
द्विजाय चास्मै गुणराजिराजिने, सुभर्तृदत्ता हि सुता न दुःखभाक् ॥१२२॥
विचार्य चाध्यापक एव जम्बुकावचो मनोहारि तदाऽऽयतौ हितम् ।

व्यवाहयत्तां कपिलेन कन्यकां महोत्सवात् कोविदवर्णनातिगात् ॥१२३॥
निकेतनं च प्रददौ मनोरमं महासरोवत् कमलोपशोभितम् ।
सुधाभिरालीढमनुष्णभानुवद् विशालताऽऽलिङ्गितमन्तरिक्षवत् ॥१२४॥
कलत्रवन्तं स्वममंस्त स द्विजस्तयैव भक्तिप्रतिपत्तिशीलया ।
अरुन्धतीजानिरिवाक्षमालया निशीथिनीनाथ इव त्रियामया ॥१२५॥
अजीगमत्कांश्चन वत्सरानयं तुषारकालोदितवासरानिव ।
समं तया वैषयिकं सुखं भजन् क्व नानुरूपं कृतपुण्यसम्पदाम् ? ॥१२६॥
तनूभुवां पाठनिमित्तकारणाद् ग्रहातिचारादिविबोधनादपि ।
नवीनजामातृतया च सत्यकेरपूजि भक्त्या कपिलो न कैर्जनैः ? ॥१२७॥
स कोऽपि नैवास्ति न येन काञ्चनं व्यतारि तस्मै कपिलाय मानतः ।
जनः समग्रो यदि वा बहिर्मुखः प्रवाहमालम्ब्य बलात्प्रवर्तते ॥१२८॥
अशेषशास्त्रागमतत्त्वदर्शिनां निदर्शनं प्राक्कपिलः स्वतोऽभवत् ।
अनन्तरं सत्यकिनन्दनाश्रितो धनेश्वराणां प्रथमं निदर्शनम् ॥१२९॥
शिखण्डकान् धारयतोऽपि पक्षिणः प्रनर्तयन्ती घनगर्जिवादनात् ।
प्रसह्य हंसानपि या विदेशगान् स्वरूपसन्दर्शनतः प्रकुर्वती ॥१३०॥
समुन्नमत्पीनपयोधरा रसं प्रपुष्णती केतकपत्ररोचना ।
प्रवर्त्तयन्ती सुमनोविकाशनं वधूरिव प्रावृडुपागमत्तदा ॥१३१॥

(युग्मम्)

सुगन्धितात्केषु सुवर्णकेतकीसुमेषु लीना भ्रमरावली स्थिरा ।
व्यनक्ति यत्रैव महेभ्यकारितां सुवर्णशालोपहिताश्मगर्भताम् ॥१३२॥
सुखस्थिता यत्र सुवर्णमालतीविकाशिपुष्पेषु षडंह्रिसन्ततिः ।
प्रपाकिजम्बूफलविभ्रमाच्छुकैर्विचुम्ब्य चञ्चूभिरहो व्यमुच्यत ॥१३३॥
नभोमणिर्यत्र धरोपतापनापराधतः क्वापि निलीय तस्थिवान् ।
परैरभेद्ये कमलोत्कराञ्चिते नभः समाक्रम्य नवाम्बुदे स्थिते ॥१३४॥
ग्रहाधिपे सागसि विश्वतापनात् कलानिधिर्यत्र करप्रसारणाम् ।
अलं न कर्तुं जलदेऽतिगर्जति, प्रकोपने स्वामिनि का विचारणा ? ॥१३५॥
भवन्ति यस्माद्भुवनानि भूरिशो यतोऽपि दुर्भिक्षमुपैति संक्षयम् ।
धनानि धान्यानि च यत्प्रसादनात् प्रशस्यते नो जलदागमः स किम् ? ॥

( पञ्चभिः कुलकम् )

कदाचन प्रेक्षणकस्य वीक्षणं सुरालये कापिल उत्तमर्द्धिभिः ।
समं विनिर्माय स यावदात्मना क्षपामुखे मन्दिरमेतुमैहत ॥१३७॥
घनाघनस्तावदरं प्रवर्षितुं प्रचक्रमे मारुत एव सर्पति ।
दिदृक्षुरन्तर्गतमस्य चेष्टितं स्वयं द्विजातेरिव चञ्चलेक्षणैः ॥१३८॥
न सूचिभेद्येषु तमस्सु संसरत्स्ववेक्षिता कश्चन मां प्रयायिणम् ।
इति स्वचित्तेन विचिन्त्य वाससी निधाय कक्षान्तरयं गृहं प्रति ॥१३९॥
प्रियावियोगं न विसोढुमीश्वरो वलाहके वर्षति स प्रचेलिवान् ।
समुन्नते वारिधरेऽथवा जनः प्रियावियोगं स्ववशः सहेत कः ? ॥१४०॥
( युग्मम् )
दिगम्बरत्वं स तदा प्रपेदिवान् विबोधभाजं गुरुमन्तरेण यत् ।
विगोपना तत्पतितत्वशङ्कया कयाऽपि तेनैव निदर्शनीकृता ॥१४१॥
दिगम्बरत्वं परमीश्वरस्य वा प्रकाशते नैव परस्य कस्यचित् ।
न लोकमालम्ब्य बिभर्ति यः स्थितिं न यस्य तृष्णा क्वचिदप्यनारतम्॥१४२॥
अनावृतद्वारकपाटसंपुटं प्रियासमुद्दीपितदीप्रदीपकम् ।
गृहं समासाद्य विलम्ब्य च क्षणं द्विजः स वस्त्रे परिधाय चाविशत् ॥१४३॥
प्रियस्य वासांसि घनेन तेमितान्यवश्यमस्य स्युरितीह तत्प्रिया ।
प्रविश्य सा वासगृहं पतिव्रता पराणि तान्यानयति स्म भाविनी ॥१४४॥
इमे स्ववस्त्रे विजहीहि वार्षुकाम्बुवाहनिर्मुक्तजलौघतेमिते ।
मदाहृते शारदचन्द्रसच्छवी गृहाण धीमन् ! परिधेहि चायते ॥१४५॥
तयेत्थमासक्तिवशादुदीरितः सविस्मयं सास्मितमाह स स्म ताम् ।
प्रिये ! न वस्त्रे मम तेमिते स्फुरत्प्रभावमन्त्रेण मयैव रक्षिते ॥१४६॥
न चेत्प्रतीतिस्तदिमे निभालय प्रभाऽऽलयस्वाङ्गजितामराङ्गने ! ।
इतीरिता संस्पृशती तदंशुके वपुश्च तस्यार्द्रमसावचिन्तयत् ॥१४७॥
यदङ्गमार्द्रीकृतमम्बुविन्दुभिर्विहाय वासः कथमेतदिष्यते ? ।
न मन्त्रमाहात्म्यमजागरूककं गुरूक्तमेवं क्वचनापि शम्यते ॥१४८॥
शरीररक्षाकरणाय कोविदैर्विशिष्य मन्त्रः खलु शिक्ष्यते गुरोः ।
विनोदमात्रप्रतिपत्तिहेतवे न धीमतां स्युर्जगति प्रवृत्तयः ॥१४९॥
त्रिवर्गनिर्माणविशिष्टसाधनं वदन्ति साक्षात्स्वशरीररक्षणम् ।
क्रमात्परीणामवशेन देहिनां प्रसाधयत्येतदपीह निर्वृतिम् ॥१५०॥

प्रसर्पति ध्वान्तभरे दिगङ्गनामुखाम्बुजाच्छादनजातकौतुके ।
निरंशुकीभूय समीयिवानयं ध्रुवं स्वकक्षानिहितांशुकद्वयः ॥१५१॥
कुलीनतां तत्र परिस्पृशत्ययं विवेचितस्तादृशकर्मनिर्मितेः ।
किमत्र कार्यं, यदि वा परीक्षया कुलानुमानेन विचेष्टते जनः ॥१५२॥
पपाठ वेदानपि कर्णघर्षणैरयं सनिर्बन्धतया शठः क्वचित् ।
चिरत्नसंस्कारविवर्द्धिता हि धीर्बहिर्भवं न व्यवसायमीहते ॥१५३॥
अलं तदेतेन ममापि संकथा विधातुमेतेन कुकर्मणाऽमुना ।
कुलाङ्गनानां विप्रयोपसेवनं कुलीनभर्त्रा हि सह प्रशस्यते ॥१५४॥
अहं पितृभ्यामविमृश्यकारितापरिष्कृताभ्यां परिणायिता पुरा ।
विमोचनीया वचनीयता स्थितेरतः कथङ्कारमुदारसंपदः ? ॥१५५॥
न पौरवाक्यैरपि मामयं जडः स्मरामयप्लुष्टविवेकविग्रहः ।
कुलाभिमानं स्पृशतीमुदित्वरं वरं परित्यक्ष्यति रक्षितग्रहः ॥१५६॥
न कोऽपि तादृक् सुजनोऽस्ति मामतो विमोक्ष्यते यो वचनैः श्रुतिश्रुतैः ।
न वेदवाक्यव्यवहारलोपिनो विनिर्मिमीते हि जनः सभाजनम् ॥१५७॥

अथ प्रथममिङ्गितैस्तदनुचेष्टितैरप्यहं
करोमि किल दुर्धियः कुलविशेषसंवेदनम् ।
ततो विधृतनिश्चया सपदि मुक्त्युपायं पुरा
भजामि वरमित्यसौ परिविमृश्य चिन्तां जहौ ॥१५८॥

तन्वाना लक्ष्मानव्यतिकरमवनीविस्फुरद्भद्रशाला
स्वान्तर्भूतं समुच्चं विबुधसमुचितं सौमनस्यं दधाना ।
कल्याणस्यैकभूमिर्गिरि-परिदृढतां ख्यापयन्ती तथापि
ज्ञाता नो मन्दरागाऽनुकरणनिपुणा केनचित्सत्यभामा ॥१५९॥

आसीत् श्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः
पट्टे श्रीगुणभद्रसूरिसुगुरुर्विद्यावतां सद्गुरुः ।
तच्छिष्येण कृतेऽत्र षोडशजिनाधीशस्य वृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽयमाद्योऽगमत् ॥१६०॥

॥ इति श्रीशान्तिनाथचरित्रे प्रथमः सर्गः ॥

